हृदयभेदकत्वासंबन्धेऽपि संबन्धाभिधानादतिशयोक्तिः । सा च वाक्ष्यवेगभ्रमोत्थापितेति तयोरङ्गाङ्गिभावेन संकरः ॥

**नयनादिव शूलिनः प्रवृत्तैर्मनसोऽप्याशुतरं यतः पिशङ्गैः ।**
**विदधे विलसत्तडिल्लताभैः किरणैर्व्योमनि मार्गणस्य मार्गः ॥२२॥**

नयनादिति ॥ शूलिनो नयनात्प्रवृत्तैर्निर्गतैरिव स्थितैरित्युत्प्रेक्षा । नेत्राग्निशिखाकल्पैरित्यर्थः । पिशङ्गैः पिङ्गलैर्विलसत्तडिल्लताभैर्विद्युद्दामतुल्यैरित्युपमा । मनसश्चित्तादप्याशुतरं शीघ्रतरम् । आशुशब्दादनव्ययात्तरप् । अतः 'किमेत्तिङव्यय—' इत्यादिनाम्प्रत्ययो न । 'क्लीबे शीघ्राद्यसत्त्वे स्यात्त्रिष्वेषां सत्त्वगामि यत्' इत्यमरः । यतो गच्छतः । इणः शतृप्रत्ययः । मार्गणस्य शरस्य । 'कदम्बमार्गणशराः' इत्यमरः । किरणैर्व्योमन्याकाशे मार्ग उल्कारेखाकारः पन्था विदधे विरचित इति स्वभावोक्तिरलंकारः ॥

**अपयन्धनुषः शिवान्तिकस्थैर्विवरेसद्भिरभिख्यया जिहानः ।**
**युगपद्ददृशे विशन्वराहं तदुपोढैश्च नभश्चरैः पृषत्कः ॥ २३ ॥**

अपयन्निति ॥ पृषत्को बाणः । 'पृषत्कबाणविशिखाः' इत्यमरः । धनुषः पिनाकादपयन्निर्यन् । निर्गच्छन्नित्यर्थः । इणः शतृप्रत्ययः । शिवान्तिकस्थैर्नभश्चरैरभिख्यया शोभया जिहानः । शोभनं गच्छन्नित्यर्थः । 'ओहाङ् गतौ' इति धातोः शानच् । 'अभिख्या नामशोभयोः' इत्यमरः । विवरे सीदन्तीति विवरेसदस्तैर्विवरेसद्भिरन्तरालवर्तिभिर्नभश्चरैः । 'सत्सूद्विष—' इत्यादिना क्विप् । 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । अथ वराहं विशन्प्रविशंस्तदुपोढैस्तं वराहमुपोढैः प्रत्यासन्नैः । वहेः कर्तरि क्तः । नभश्चरैर्युगपद्ददृशे दृष्ट इति बाणवेगोक्तिः । अत्र क्रमेण निष्क्रमणादिक्रियाविशिष्टस्य बाणस्य शिवान्तिकादिभिन्नदेशस्थनभश्चरकर्तृकदर्शनयौगपद्यासंबन्धेऽपि तत्संबन्धोक्तिमूलातिशयोक्त्या लोकोत्तरवेगप्रतीतेरलंकारेण वस्तुध्वनिः ॥

**स तमालनिभे रिपौ सुराणां घननीहार इवाविषक्तवेगः ।**
**भयविप्लुतमीक्षितो नभःस्थैर्जगतीं ग्राह इवापगां जगाहे ॥ २४ ॥**

स इति ॥ स बाणस्तमालनिभे तमालप्रभे । नीलाभ इति यावत् । सुराणां रिपौ वराहे घननीहारे सान्द्रतुहिन इवाविषक्तवेगोऽप्रतिबद्धवेगः सन् । तथा नभःस्थैः खेचरैर्भयेन विप्लुतं विह्वलं यथा तथेक्षितः सन् । अपां संबन्धि वेग आपः, अपां समूहो वापम् । आपेन गच्छतीत्यापगा नदी ताम् । गृह्णातीति ग्राहो जलग्राहः । जलचर इति यावत् । 'जलचरे' इति वक्तव्यात् 'विभाषा ग्रहः' इति णप्रत्ययः । स इव । जगतीं भूमिम् । 'जगती विष्टपे मह्यां वास्तुच्छन्दोविशेषयोः' इति वैजयन्ती । जगाहे विवेश । अन्तर्हित इत्यर्थः ॥

अथार्जुनबाणप्रयोगमाह—

**सपदि प्रियरूपपर्वरेखः सितलोहाग्रनखः खमाससाद ।**
**कुपितान्तकतर्जनाङ्गुलिश्रीर्व्यथयन्प्राणभृतः कपिध्वजेषुः ॥ २५ ॥**

१ 'वनस्थैः' इति पाठः. २ 'मुखः' इति पाठः.

सपदीति ॥ सपदि शिवबाणप्रयोगसमय एव प्रिया रूपमाकृतिः पर्वाणि ग्रन्थयो रेखा रचनाश्च यस्य सः । अङ्गुलिपक्षे पर्वरेखाः प्रसिद्धाः । लोहाग्रमयः फलं तन्नखमिवेत्युपमितसमासः । सितं लोहाग्रनखं यस्य सः । कुपितस्यान्तकस्य मृत्योर्या तर्जनस्याङ्गुलिस्तर्जनाङ्गुलिस्तस्याः श्रीरिव श्रीर्यस्य सः कपिध्वजेपुरर्जुनबाणः प्राणभृतो व्यथयन्भीषयमाणः खमाकाशमाससाद प्राप । उपमालंकारः ॥

**परमास्त्रपरिग्रहोरुतेजः स्फुरदुल्काकृति विक्षिपन्वनेषु ।**
**स जवेन पतन्परःशतानां पततां व्रात इवारवं वितेने ॥ २६ ॥**

परमेति ॥ परमास्त्रपरिग्रहेण दिव्यास्त्राधिष्ठानेनोरु महदत एव स्फुरदुल्काकृति । उल्कावद्दीर्घायमाणमित्यर्थः । तेजो वनेषु विक्षिपन्विकिरन्सन् । जवेन पतन्धावन्स बाणः । शतात्परे परःशतास्तेषाम् । शताधिकसंख्याकानामित्यर्थः । 'परःशताद्यास्ते येषां परा संख्या शतादिकात्' इत्यमरः । 'पञ्चमी–' इति योगविभागात्समासः । 'राजदन्तादिषु परम्' इत्युपसर्जनस्य शतशब्दस्य परनिपातः । पारस्करादित्वात्सुडागमः । पततां पतत्रिणाम् । 'पतत्पत्ररथाण्डजाः' इत्यमरः । व्रातः समूह इवारवं वितेने विस्तारयामास ॥

**अविभावितनिष्क्रमप्रयाणः शमितायाम इवातिरंहसा सः ।**
**सह पूर्वतरं नु चित्तवृत्तेरपतित्वा नु चकार लक्ष्यभेदम् ॥ २७ ॥**

अविभावितेति ॥ अतिरंहसातिवेगेनाविभाविते ऽलक्षिते निष्क्रमो गाण्डीवान्निःसरणं प्रयाणमन्तरागमनं च यस्य सः । तथा शमितायामः संक्षिप्तदैर्घ्य इव स्थित इत्युपात्तवेगगुणनिमित्ता दैर्घ्यगुणाभावोत्प्रेक्षा । स शरः । सह नु सह वा । चित्तवृत्त्येति शेषः । चित्तवृत्तेः पूर्वतरं नु प्रागेव वा । उभयत्रापि लक्ष्ये पतित्वेति शेषः । अथवाऽपतित्वा नु । लक्ष्य इति शेषः । लक्ष्यभेदं चकार । अत्रोपात्तवेगगुणनिमित्ताद्बाणस्य चित्तवृत्त्या सहपातपूर्वपतनाभावोत्प्रेक्षास्तिस्र उत्तरोत्तरोत्कर्षेण वेगातिशयव्यञ्जिका इत्यलंकारेण वस्तुध्वनिः ॥

**स वृषध्वजसायकावभिन्नं जयहेतुः प्रतिकायमेषणीयम् ।**
**लघु साधयितुं शरः प्रसेहे विधिनेवार्थमुदीरितं प्रयत्नः ॥ २८ ॥**

स इति ॥ जयहेतुः स शरो वृषध्वजसायकावभिन्नं शिवशरविद्धमेषणीयम् । वेद्धुमिति शेषः । इषेरिच्छार्थादनीयर्प्रत्ययः । प्रतिकायम् । प्रतिपक्षमिति यावत् । विधिना विधिवाक्येनोदीरितं फलसाधनतया प्रतिपादितमर्थं यागादिकं प्रयत्नः पुरुषव्यापार इव । लघ्वक्लेशेन यथा तथा साधयितुम् । स्वार्थणिजन्तात्तुमुन् । प्रसेहे शशाक । उपमालंकारः ॥

**अविवेकवृथाश्रमाविवार्थं क्षयलोभाविव संश्रितानुरागम् ।**
**विजिगीषुमिवानयप्रमादाववसादं विशिखौ विनिन्यतुस्तम् ॥ २९ ॥**

अविवेकेति ॥ अविवेकोऽन्तरानभिज्ञत्वं वृथाश्रमो निष्फलप्रयासस्तावर्थं धनमिव । अस्थानविनियोगहेतुकत्वादनयोर्धनहानिकरत्वमिति भावः । क्षयोऽनुपचयो लोभोऽदातृत्वं तौ संश्रितानामनुजीविनामनुरागमिव । अकिंचित्करे

स्वामिन्यनुरागस्थानवस्थानादिति भावः। अनयो दुर्नीतिः प्रमादोऽनवधानता तौ विजिगीषुमिव। रन्ध्रभूयिष्ठस्य जयासिद्धेरिति भावः। विशिखौ शिवार्जुनबाणौ तं वराहमवसादं करणशैथिल्यं विनिन्यतुर्नीतवन्तौ। नयतिर्द्विकर्मकः। मालोपमेयम्॥

अथ दीर्घतमं[1] तमः प्रवेक्ष्यन्सहसा रुग्णरयः स संभ्रमेण।
निपतन्तमिवोष्णरश्मिमुर्व्यां वलयीभूततरुं धरां च मेने॥३०॥

अथेति॥ अथ स वराहो दीर्घतमं तमो दीर्घनिद्रां प्रवेक्ष्यन्। मरिष्यन्नित्यर्थः। सहसा झटिति रुग्णरयो भग्नवेगः संभ्रमेण भ्रान्त्या। 'संभ्रमो भ्रान्तिहावयोः' इति विश्वः। उष्णरश्मिमुर्व्यां भूमौ निपतन्तमिव मेने। धरां च वलयीभूता मण्डलीभूतास्तरवो यस्यास्तां तथा मेने। तथा बभ्रामेत्यर्थः। स्वभावोक्तिरलंकारः॥

स गतः क्षितिमुष्णशोणितार्द्रः[2] खुरदंष्ट्राग्रनिपातदारिताश्मा।
असुभिः क्षणमीक्षितेन्द्रसूनुर्विहितामर्षगुरुध्वनिर्निरासे॥३१॥

स इति॥ क्षितिं गतः क्षितौ पतित उष्णेन प्रत्यग्रत्वाच्छोणितेनार्द्रः क्लृतः खुराणां दंष्ट्रयोश्चाग्राणां निपातेनाघातेन दारिताश्मा पाटितपाषाणः। किंच। क्षणमीक्षितेन्द्रसूनुः। स्वार्थविघातरोषादिति भावः। अत एव विहितः कृतोऽमर्षगुरुः क्रोधोद्धतो ध्वनिः क्रन्दितं येन स तथोक्तः स वराहोऽसुभिः प्राणैर्निरासे निरस्तः। त्यक्त इत्यर्थः। अस्यतेः कर्मणि लिट्। इयं च स्वभावोक्तिः॥

स्फुटपौरुषमापपात पार्थस्तमथ प्राज्यशरः शरं जिघृक्षुः।
न तथा कृतवेदिनां करिष्यन्प्रियतामेति यथा कृतावदानः॥३२॥

स्फुटेति॥ अथ वराहपातानन्तरं पार्थोऽर्जुनः प्राज्यशरः प्रभूतशरः। सन्नपीत्यर्थः। 'प्रभूतं प्रचुरं प्राज्यम्' इत्यमरः। स्फुटपौरुषं व्यक्तविक्रमं वराहभेदिनं शरं जिघृक्षुर्ग्रहीतुमिच्छुः। ग्रहेः सन्नन्तादुप्रत्ययः। आपपाताधावति स्म। कृतज्ञतया शरग्रहणं न तु लोभादित्यर्थः। नन्वन्येऽप्युपकर्तार एव, किमित्यत्रैवादरस्तत्रा-ह—कृतवेदिनां कृतज्ञानां कृतावदानः कृतकर्मा। 'अवदानं कर्म वृत्तम्' इत्यमरः। यथा प्रियतामेति तथा करिष्यन्नुपकरिष्यन्न प्रियतामेति। 'कृतकरिष्यमाणयोः कृतं बलीयः' इति न्यायादिति भावः॥

अथ युग्मेनाह—

उपकार इवासति प्रयुक्तः स्थितिमप्राप्य मृगे गतः प्रणाशम्।
कृतशक्तिरवाङ्मुखो[3] गुरुत्वाज्जनितव्रीड इवात्मपौरुषेण॥३३॥

उपकार इति॥ असति नीचे प्रयुक्त उपकार इव मृगे स्थितिमप्राप्य प्रणाशमदर्शनं गत इत्युपमा। यथा कृतशक्तिः कृतपौरुषो गुरुत्वाल्लोहभाराद्गौरवत्वाच्चावाङ्मुखो नम्रमुखः। अत एवात्मपौरुषेण जनितव्रीड इव स्थित इत्युत्प्रेक्षा॥

---

१ 'दीर्घतरं तमः प्रतीक्षन्' इति पाठः. २ 'शोणितार्द्राम्' इति पाठः. ३ 'अधोमुखः' इति पाठः.

स समुद्धरता विचिन्त्य तेन स्वरुचं कीर्तिमिवोत्तमां[1] दधानः।
अनुयुक्त इव स्ववार्तमुच्चैः परिरेभे नु भृशं विलोचनाभ्याम् ॥३४॥

स इति ॥ उत्तमां स्वरुचं स्वकान्तिं कीर्तिमिव दधान इत्युत्प्रेक्षा। किंच। विचिन्त्य सर्वथा ग्राह्योऽयमिति विमृश्य समुद्धरता तेनार्जुनेनोच्चैः स्ववार्तं स्वपाटवम्। 'वार्तं पाटवमारोग्यं भव्यं स्वास्थ्यमनामयम्' इति यादवः। अनुयुक्तः पृष्ट इव स्थित इत्युत्प्रेक्षा। आदरात्तथा प्रतीयत इत्यर्थः। 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः। स बाणो विलोचनाभ्यां नयनाभ्यां कृत्वा भृशं परिरेभे न्वालिङ्गितः किमित्युत्प्रेक्षा। तेनात्यादरेण दृष्ट इत्यर्थः ॥

तत्र कार्मुकभृतं महाभुजः पश्यति स्म सहसा वनेचरम्।
संनिकाशयितुमग्रतः स्थितं शासनं कुसुमचापविद्विषः[2] ॥ ३५ ॥

तत्रेति ॥ तत्र प्रदेशे महाभुजोऽर्जुनः कुसुमचापविद्विषः स्मरारेः शासनं वक्ष्यमाणमादेशं संनिकाशयितुं प्रकाशयितुम्। निवेदयितुमिति यावत्। अग्रतः स्थितं कार्मुकभृतं वनेचरं सहसा झटिति पश्यति स्म। इतः प्रभृति रथोद्धतावृत्तम्—'रो नराविह रथोद्धता लगौ' इति लक्षणात् ॥

स प्रयुज्य तनये महीपतेरात्मजातिसदृशीं किलानतिम्।
सान्त्वपूर्वमभिनीतिहेतुकं वक्तुमित्थमुपचक्रमे वचः ॥ ३६ ॥

स इति ॥ स वनेचरो महीपतेस्तनये राजपुत्रेऽर्जुन आत्मजातिसदृशीं किरातजात्यनुरूपां किल। किलेति जातेरलीकतां दर्शयति। यतः। परमार्थतः प्रमथ एव सः। आनतिं प्रणतिं प्रयुज्य सान्त्वपूर्वं सामपूर्वकम्। 'साम सान्त्वमुभे समे' इत्यमरः। अभिनीतिहेतुकं प्रिययुक्तिहेतुकं वचः। इत्थं वक्ष्यमाणप्रकारेण वक्तुमुपचक्रम उपक्रान्तवान् ॥

तत्र तावच्चतुर्भिः सान्त्वमाह—

शान्तता विनययोगि मानसं भूरि धाम विमलं तपः श्रुतम्।
प्राह ते नु सदृशी दिवौकसामन्ववायमवदातमाकृतिः ॥ ३७ ॥

शान्ततेति ॥ शान्तता बहिरनौद्धत्यं ते तव विनययोग्यनौद्धत्ययुक्तं मानसं कर्म प्राह नु ब्रूते खलु। तथा भूरि बहु धाम तेजो यस्मिंस्तत्तपः कर्तृ विमलं संप्रदायशुद्धं श्रुतं प्राह। किं च। द्यौर्दिवं वौको येषां तेषां दिवौकसां देवानाम्। पृषोदरादित्वात्साधुः। 'दिवं स्वर्गेऽन्तरिक्षे च' इति विश्वः। सदृशी तुल्याकृतिर्मूर्तिरवदातं शुद्धमन्ववायं वंशं प्राह। 'वंशोऽन्ववायः संतानः' इत्यमरः। शान्त्यादिभिर्लिङ्गैर्विनयादयोऽनुमीयन्ते। अन्यथा तदसंभवादिति भावः ॥

दीपितस्त्वमनुभावसंपदा गौरवेण लघयन्महीभृतः।
राजसे मुनिरपीह कारयन्[3]नाधिपत्यमिव शातमन्यवम् ॥ ३८ ॥

---

१ 'उन्नताम्' इति पाठः. २ 'कुसुमकेतु', 'मकरकेतु' इति पाठौ. ३ 'धारयन्' इति पाठः.

दीपित इति ॥ मुनिरपि । ऐश्वर्यरहितोऽपीत्यर्थः। अनुभावसंपदा प्रभावातिशयेन दीपितः प्रकाशितः । 'अनुभावः प्रभावे च' इत्यमरः । गौरवेण महत्तया महीभृतो राज्ञो लघयँल्लघूकुर्वन् । त्वमिहाद्रौ । शतमन्योरिदं शातमन्यवमैन्द्रम् । 'तस्येदम्' इत्यण्प्रत्ययः । 'शतमन्युर्दिवस्पतिः' इत्यमरः । अधिपतेः कर्माधिपत्यं त्रैलोक्यरक्षाधिकारम् । ब्राह्मणादित्वात्ष्यञ्प्रत्ययः । कारयन्निव इन्द्रेणेति शेषः । राजसे तस्याप्युपजीव्य इति प्रतीयसे । स्वमहिम्नेत्यर्थः ॥

तापसोऽपि विभुतामुपेयिवानास्पदं त्वमसि सर्वसंपदाम् ।
दृश्यते हि[1] भवतो विना जनैरन्वितस्य सचिवैरिव द्युतिः ॥ ३९ ॥

तापस इति ॥ विभुतां प्रभावमुपेयिवानुपगतः । अतएव तापसोऽपि त्वं सर्वसंपदामास्पदं स्थानमसि । 'आस्पदं प्रतिष्ठायाम्' इति निपातः । विभुतामेव समर्थयते—तथाहि भवतस्तव जनैर्विनापि । एकाकिनोऽपीत्यर्थः । सचिवैरन्वितस्येवामात्यादियुक्तस्येव द्युतिस्तेजो दृश्यते । अतः सर्वसंपदामास्पदत्वं युक्तमित्यर्थः ॥

विस्मयः क इव वा जयश्रिया नैव मुक्तिरपि ते दवीयसी ।
ईप्सितस्य न भवेदुपाश्रयः कस्य निर्जितरजस्तमोगुणः ॥ ४० ॥

विस्मय इति ॥ किं च । जयश्रिया हेतुना । प्राप्स्यापीति शेषः । क इव वा विस्मयः किमाश्चर्यम् । न कश्चिदित्यर्थः । 'विस्मयोऽद्भुतमाश्चर्यं चित्रम्' इत्यमरः । अतो मुक्तिरपि ते तव दवीयसी दूरतरा दुर्लभा न भवत्येव । 'स्थूलदूर—' इत्यादिना यणादिपरलोपः पूर्वगुणश्च । तथाहि निर्जितौ रजस्तमसी एव गुणौ येन स कस्येप्सितस्य वाञ्छितस्योपाश्रय आस्पदं न भवेदित्यर्थः ॥

*आगमनप्रयोजनमुपालम्भमुखेनाह—*

ह्रेपयन्नहिमतेजसं त्विषा स त्वमित्थमुपपन्नपौरुषः ।
हर्तुमर्हसि वराहभेदिनं नैनमस्मदधिपस्य सायकम् ॥ ४१ ॥

ह्रेपयन्निति ॥ त्विषा तेजसाऽहिमतेजसमुष्णतेजसं ह्रेपयँल्लज्जयन्नुपपन्नपौरुषः संभावितपराक्रमः स प्रसिद्धस्त्वं वराहभेदिनम् । कृतोपकारमित्यर्थः । एनं त्वत्करगतमस्मदधिपस्य सायकं शरमित्थं साहसेन हर्तुं नार्हसि ॥

अनर्हत्वमेवाह—

स्मर्यते तनुभृतां सनातनं न्याय्यमाचरितमुत्तमैर्नृभिः ।
ध्वंसते यदि भवादृशस्ततः कः प्रयातु वद तेन वर्त्मना ॥ ४२ ॥

स्मर्यत इति ॥ उत्तमैर्नृभिः सत्पुरुषैर्मन्वादिभिस्तनुभृतां शरीरिणां सनातनं नित्यं न्याय्यं न्यायादनपेतमाचरितमाचारः स्मर्यते । कर्तव्यतयेति शेषः । न त्वनाचार इत्यर्थः । अथाप्यनाचरणे दोषमाह—ध्वंसत इति । भवानिव दृश्यते भवादृशस्ततः सदाचाराद्ध्वंसते भ्रश्यते यदि तदा तेन वर्त्मना न्यायमार्गेण कः

---

१ 'अपि' इति पाठः. २ 'आचरणम्' इति पाठः.

प्रयातु गच्छतु वद कथय । न कोऽपीत्यर्थः । तथा च सन्मार्ग एव खिलः स्यादिति भावः ॥

**आकुमारमुपदेष्टुमिच्छवः संनिवृत्तिमपथान्महापदः ।**
**योगशक्तिजितजन्ममृत्यवः शीलयन्ति यतयः[1] सुशीलताम् ॥ ४३ ॥**

आकुमारमिति ॥ किं च । योगशक्त्यात्मज्ञानमहिम्ना जितौ जन्ममृत्यू यैस्ते यतयो योगिनः । आकुमारेभ्य आकुमारम् । कुमारादारभ्येत्यर्थः । 'आङ् मर्यादाभिविध्योः' इत्यव्ययीभावः । महत्य आपदो यस्मिंस्तस्मान्महापदः । महानर्थहेतोरित्यर्थः । अपथादमार्गात् । 'पथो विभाषा' इति निषेधविकल्पात्समासान्तः । 'अपथं नपुंसकम्' । संनिवृत्तिमपगममुपदेष्टुमिच्छवः सन्तः सुशीलतां सद्वृत्ताम् । 'शीलं स्वभावे सद्वृत्ते' इत्यमरः । शीलयन्त्यभ्यस्यन्ति । अतो न त्याज्यं शीलमित्यर्थः ॥

न केवलं सौशील्यादनर्थनिवृत्तिः, किं त्वर्थप्राप्तिरपीत्याह—

**तिष्ठतां तपसि पुण्यमासजन्संपदोऽनुगुणयन्सुखैषिणाम् ।**
**योगिनां परिणमन्विमुक्तये केन नास्तु विनयः सतां प्रियः ॥ ४४ ॥**

तिष्ठतामिति ॥ तपसि तिष्ठतां तपोनिष्ठानाम् । धर्मार्थिनामित्यर्थः । पुण्यं धर्ममासजन्संपादयन् । 'स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः' इत्यमरः । सुखैषिणां सुखार्थिनां संपदः सुखसाधनभूतानर्थाननुगुणयन्ननुकूलयन् । अर्थकामयोरपि हेतुभूत इत्यर्थः । तथा योगिनां विमुक्तयेऽपवर्गाय परिणमन्संपद्यमानो विनयः सौशील्यं केन हेतुना सतां प्रियो नास्तु । संभावनायां लोट् । सर्वथा विनय एव चतुर्वर्गसाधनमित्यर्थः । अतस्त्वया नास्मत्स्वामिशरचौर्यं कार्यमिति तात्पर्यम् ॥

अथवा किं भवादृशेष्वन्यसंभावनया यतो भ्रान्तिरपि संभाव्यत इति मृदूक्तिमवलम्ब्याह—

**नूनमत्रभवतः शराकृतिं सर्वथायमनुयाति सायकः ।**
**सोऽयमित्यनुपपन्नसंशयः कारितस्त्वमपथे पदं यया ॥ ४५ ॥**

नूनमिति ॥ अयमस्मदीयः सायकोऽत्रभवतः । पूज्यस्येत्यर्थः । 'पूज्यस्तत्रभवानत्रभवान्' इति सज्जनः । 'इतराभ्योऽपि दृश्यन्ते' इति सार्वविभक्तिकस्तसिल्प्रत्ययः । सुप्सुपेति समासः । शराकृतिं सर्वथा रूपेण रेखादिना सर्वप्रकारेणानुयात्यनुसरति । अत्यन्तमनुकरोतीत्यर्थः । नूनमिति वितर्के । ययाकृत्या कर्त्र्या त्वमनुपपन्नसंशयोऽत्यन्तसादृश्यादनुत्पन्नस्वान्यदीयत्वसंदेहः सन् । सोऽयमिति यः स्वकीयः स एवायमिति । भ्रान्त्युत्पत्त्यैवेति शेषः । अपथेऽमार्गे शरापहरणरूपे पदं कारितः । निधापित इत्यर्थः । 'हृक्रोरन्यतरस्याम्' इत्यणि कर्तुः कर्मता । 'ण्यन्ते कर्तुश्च कर्मणः' इति तत्रैवाभिहिते कर्मणि क्तः ॥

---

[1] 'मुनयः' इति पाठः.

पुनरपि स्तेयमेव द्रढयन्दोषान्तरमापादयति—

अन्यदीयविशिखे न केवलं निःस्पृहस्य भवितव्यमाहृते ।
निघ्नतः परनिबर्हितं मृगं व्रीडितव्यमपि ते सचेतसः ॥ ४६ ॥

अन्यदीयेति ॥ सह चेतसा वर्तत इति सचेतास्तस्य मनस्विनस्तेऽन्यदीयविशिखे विषये यदाहृतमाहरणम् । भावे क्तः । तस्मिन् । अन्यदीयविशिखस्याहरण इत्यर्थः । निःस्पृहस्य केवलं निःस्पृहेणैव न भवितव्यम् । किं तु परनिबर्हितं परेण प्रहृतं मृगं निघ्नतः प्रहरतस्ते । निघ्नता त्वयेत्यर्थः । 'कृत्यानां कर्तरि वा' इति षष्ठी । व्रीडितव्यं लज्जितव्यमपि । भावे तव्यप्रत्ययः । संप्रति तु त्वया परविद्धं मृगं विद्ध्वापि न व्रीड्यते प्रत्युत स्तेयमेव क्रियत इत्यहो महत्साहसमित्यर्थः । मृगमित्यत्र शेषत्वाविवक्षणात् 'जासिनिप्रहणनाटक्राथपिषां हिंसायाम्' इति षष्ठी न भवति शेषाधिकारात् । निप्रहरणेत्यत्र निप्रयोः संघातव्यस्तविपर्यस्तानां ग्रहणात् ॥

अथास्मिन्कृतघ्नताभियोगाय स्वीयोपकारकत्वं वर्णयितुं विकत्थनदोषं तावद्युग्मेन परिहरन्नाह—

संततं निशमयन्त उत्सुका यैः प्रयान्ति मुदमस्य सूरयः ।
कीर्तितानि हसितेऽपि तानि यं व्रीडयन्ति चरितानि मानिनम् ॥ ४७ ॥

संततमित्यादि ॥ सूरयो विद्वांसोऽस्यास्मत्स्वामिनः संबन्धिभिर्यैश्चरितैः करणभूतैः संततं सततमुत्सुकाः सोत्कण्ठाः सन्तो निशमयन्तश्चरितानि शृण्वन्तो मुदं प्रयान्ति । अत्र चरितानां मुत्प्राप्तौ शाब्दं करणत्वम् । अर्थान्निशमनकर्मत्वमिति विवेकः । तानि चरितानि हसितेऽपि परिहासेऽपि कीर्तितानि परैरुच्चारितानि सन्ति यं मानिनं व्रीडयन्ति । मानित्वाद्व्रीडा न तु चरितदोषात् । तेषामलंकाररूपत्वादिति भावः ॥

अन्यदोषमिव स स्वकं गुणं ख्यापयेत्कथमधृष्टताजडः ।
उच्यते स खलु कार्यवत्तया धिग्विभिन्नबुधसेतुमर्थिताम् ॥ ४८ ॥

अन्येति ॥ अधृष्टतया विकत्थनेन शालीनतया जडः स्तब्धः । अविकत्थन इत्यर्थः । सोऽस्मत्स्वाम्यन्यदोषं परावरगुणमिव स्वयं स्वकीयं गुणं कथं ख्यापयेत्प्रकटयेत् । 'आत्मप्रशंसां परगर्हामिव वर्जयेत्' इति स्मरणादिति भावः । तथापि कार्यवत्तया । कार्यार्थितयेत्यर्थः । सः स्वगुण उच्यते खलु । कार्यार्थिनः कुतो गर्व इति भावः । निर्विण्ण इवाह—धिगिति । विभिन्नबुधसेतुमतिक्रान्तसुजनमर्यादामर्थितां याचनां धिक् । निन्दामीत्यर्थः । यदयमपीत्थं विकत्थयितुं प्रवृत्त इति भावः । 'धिङ्निर्भर्त्सननिन्दयोः' इत्यमरः । 'अभिसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु । द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते' इति द्वितीया ॥

संप्रति स्वकृतोपकारं दर्शयति—

दुर्वचं तदथ मा स्म भून्मृगस्त्वय्यसौ यदकरिष्यदोजसा ।
नैनमाशु यदि वाहिनीपतिः प्रत्यपत्स्यत शितेन पत्रिणा ॥ ४९ ॥

दुर्वचमिति ॥ वाहिनीपतिः सेनापतिरस्मत्स्वामी शितेन पत्रिणा शरेणैनं मृगमाशु न प्रत्यपत्स्यत यदि नाभियुञ्जीत चेदसौ मृग ओजसा बलेन त्वयि विषये यदकरिष्यद्यदनिष्टं कुर्यात्तद्दुर्वचं दुर्वाच्यममङ्गलतया वक्तुं न शक्यते । तद्निष्टमथानन्तरमपि मा स्म भूदिति सौहार्दकथनम् । तदुपेक्षणे स मृगस्त्वां हन्यादिति भावः । 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' इति करोतेः पद्यतेश्च लृङ् ॥

ननु मयैव हतो न तु सेनापतिना । तत्राह—

को न्विमं हरितुरङ्गमायुधस्थेयसीं दधतमङ्गसंहतिम् ।
वेगवत्तरमृते चमूपतेर्हन्तुमर्हति शरेण दंष्ट्रिणम् ॥ ५० ॥

क इति ॥ हरितुरङ्गमायुधमिन्द्रायुधं तद्वत्स्थेयसीं स्थिरतराम् । वज्रकठिनामित्यर्थः । स्थिरशब्दादीयसुन् । 'प्रियस्थिर–' इत्यादिना स्थादेशः । अङ्गसंहतिमवयवसंघातं दधतं धारयन्तं वेगवत्तरं दुर्वारवेगमिमं दंष्ट्रिणं वराहं चमूपतेः किरातवाहिनीपतेर्ऋते चमूपतिं विना । 'अन्यारात्–' इत्यादिना पञ्चमी । को नु को वा शरेण । एकेनेति भावः । हन्तुमर्हति । न कोऽपीत्यर्थः ॥

अस्तु स एव मृगस्य हन्ता । ततः किमित्यत आह—

मित्रमिष्टमुपकारि संशये मेदिनीपतिरयं[1] तथा च ते ।
तं विरोध्य[2] भवता निरासि मा सज्जनैकवसतिः कृतज्ञता ॥ ५१ ॥

मित्रमिति ॥ तथा च । तस्यैव मृगहन्तृत्वे सतीत्यर्थः । अयं मेदिनीपतिः किरातभूपतिस्ते तव संशये प्राणसंकट उपकार्युपकारकारकमिष्टं मित्रम् । ततोऽपि किं तत्राह—कमिति । तं मित्रभूतं विरोध्य सज्जनैकवसतिर्भवादृशसुजनमात्राधारा कृतज्ञतोपकारवेदित्वं मा निरासि न निराक्रियतां भवता । अन्यथा जगति कृतज्ञतास्तमियात्, कृतघ्नता च ते भवेदित्यर्थः । अस्यतेः कर्मण्याशिषि माङि लुङ् ॥

ननु सर्वस्यार्थमूलत्वात्स एवास्तु, किं मित्रेणेत्याशङ्क्य मित्रस्य सर्वाधिक्यं युग्मेनाह—

लभ्यमेकसुकृतेन दुर्लभा रक्षितारमसुरक्ष्यभूतयः[3] ।
स्वन्तमन्तविरसा जिगीषतां मित्रलाभमनु लाभसंपदः ॥ ५२ ॥

लभ्यमिति ॥ जिगीषतां जेतुमिच्छताम् । जयतेः सन्नन्ताच्छतृप्रत्ययः । दुर्लभाः कृच्छ्रेणापि लब्धुमशक्यास्तथाप्यसुरक्ष्यभूतयो रक्षितुमशक्यमहिमानः । तथापि नित्यं रक्षणादिक्लेशावहाश्चेति भावः । अन्तविरसाः । गत्वर्या इत्यर्थः । लभ्यन्त इति लाभा अर्थास्तेषां संपदः । एकसुकृतेनैकोपकारेण लभ्यं सुलभं न तु दुर्लभं रक्षितारं न तु रक्ष्यं स्वन्तं शुभावसानं न त्वन्तविरसं मित्रलाभमनु मित्रलाभाद्धीनाः । निकृष्टा इत्यर्थः । 'हीने' इत्यनोः कर्मप्रवचनीयसंज्ञा । तद्योगे द्वितीया । अत्रोपमेयस्य मित्रलाभस्य लाभान्तरं प्रत्याधिक्याभिधानाद्व्यतिरेकालंकारः ॥

---

१ 'वाहिनीपतिः' इति पाठः. २ 'विराध्य' इति पाठः. ३ 'असुरक्ष' इति पाठः.

चञ्चलं वसु नितान्तमुन्नता[1] मेदिनीमपि हरन्त्यरातयः[2] ।
भूधरस्थिरमुपेयमागतं मावमंस्त सुहृदं महीपतिम्[3] ॥ ५३ ॥

चञ्चलमिति ॥ किं च । वसु धनं नितान्तं मेदिनीमप्युन्नताः प्रबला अरातयो हरन्ति । मित्रं तु न तथेत्याह—भूधर इति । भूधरवत्स्थिरमुपेयमन्विष्य गन्तव्यमप्यागतं स्वतः प्राप्तमपि महीपतिम् । सर्वधुरीणमित्यर्थः । सुहृदं मित्रं मावमंस्त मावज्ञासीत् । भवानिति शेषः । अन्यश्लोकगतो वा भवच्छब्दो विभक्तिविपरिणामेनात्र द्रष्टव्यः । अन्यथा मध्यमपुरुषः स्यात् । मन्यतेः कर्तरि माङि लुङ् । अलंकारस्तु व्यतिरेक एव । भूधरस्थिरमित्युपमासंगतिसंकरः ॥

ननु मुमुक्षोः किं मित्रसंग्रहेणेत्यत्राह—

जेतुमेव भवता तपस्यते नायुधानि दधते मुमुक्षवः ।
प्राप्स्यते[4] च सकलं महीभृता[5] संगतेन तपसः फलं त्वया ॥ ५४ ॥

जेतुमिति ॥ भवता जेतुं जयार्थमेव तपस्यते तपश्चर्यते । 'कर्मणो रोमन्थ—' इत्यादिना चरणे क्यङ् । ततो भावे लट् । कुतः । मुमुक्षवो मोक्षार्थिन आयुधानि न दधते न धारयन्ति । अतो मित्रसंग्रहः कार्य इति भावः । तथापि किं भवत्स्वामिसख्येन, तत्राह—प्राप्स्यत इति । महीभृता सह संगतेन त्वया सकलं तपसः फलं प्राप्स्यते । अतस्ते सखाऽस्मत्स्वामी युक्त इत्यर्थः ॥

नन्वकिंचनः कुत्रोपयुज्यते, तत्राह—

वाजिभूमिरिभराजकाननं सन्ति रत्ननिचयाश्च भूरिशः ।
काञ्चनेन किमिवास्य पत्रिणा केवलं न सहते विलङ्घनम् ॥ ५५ ॥

वाजीति ॥ तस्य भूपतेर्वाजिभूमिरश्वाकर इभराजानां काननं गजोत्पत्तिस्थानं भूरिशो रत्ननिचयाश्च । सन्तीति शेषः । नन्वीदृगाढ्यः किमेकस्मै काञ्चनपत्रकाण्डाय कलहायते, तत्राह—अस्य काञ्चनेन सौवर्णेन पत्रिणा शरेण किमिव । न किंचित्प्रयोजनमस्तीत्यर्थः । परंतु केवलं विलङ्घनं व्यतिक्रमं न सहते । नायं शरलुब्धः । किंत्वधिक्षेपासहिष्णुरित्यर्थः । अत्र प्रथमार्धे समृद्धिमद्वस्तुवर्णनादुदात्तालंकारः ॥

नन्वीदृग्लुब्धः किमुपकर्ता, तत्राह—

सावलेपमुपलिप्सिते परैरभ्युपैति विकृतिं रजस्यपि ।
अर्थितस्तु[6] न महान्समीहते जीवितं किमु धनं धनायितुम् ॥ ५६ ॥

सावलेपमिति ॥ महानयं रजस्यपि धूलावपि परैः सावलेपं सगर्वमुपलिप्सित उपलब्धुमिष्टे जिघृक्षिते सति विकृतिमभ्युपैति । प्रकुप्यतीत्यर्थः । अर्थितो याचितस्तु जीवितं धनायितुं धनीकर्तुम् । क्यजन्तात्तुमुन् । न समीहते नोत्सहते । जीवितमप्यात्मनो नेच्छति । किंत्वर्थितः प्रयच्छतीत्यर्थः । तर्हि धनं किम् । धनमात्मन एषितुं धनायितुमिति विग्रहः । अत्र इच्छामात्रमर्थः । अन्यथा धनमित्य-

---

१ 'उद्धता' इति पाठः. २ 'अपहरन्ति' इति पाठः. ३ 'चमूपतिम्' इति पाठः. ४ 'प्राप्यते' इति पाठः. ५ 'चमूभृता' इति पाठः. ६ 'प्रार्थितः' इति पाठः.

नेन पौनरुक्त्यं स्यात् । 'सुप आत्मनः क्यच्' । 'अशनायोदन्यधनायाबुभुक्षापिपासागर्धेषु' इति निपातनादाकारः ॥

उक्तमर्थं निगमयति—

तत्तदीयविशिखातिसर्जनादस्तु वां गुरु यदृच्छयागतम् ।
राघवप्लवगराजयोरिव प्रेम युक्तमितरेतराश्रयम् ॥ ५७ ॥

तदिति ॥ तत्तस्मात्तदीयविशिखस्यातिसर्जनात्प्रत्यर्पणाद्वां युवयोः । 'षष्ठीचतुर्थीद्वितीयास्थयोर्वांनावौ' इति वामादेशः । राघवप्लवगराजयो रामसुग्रीवयोरिव यदृच्छया दैवादागतं गुरु महद्युक्तमनुरूपमितरेतराश्रयमन्योन्यविषयं प्रेम सख्यमस्तु ॥

ननु शरलोभान्मिथ्याभियुज्यस इत्याह—

नाभियोक्तुमनृतं त्वमिष्यसे यस्तपस्विविशिखेषु चादरः ।
सन्ति भूभृति शरा हि नः परे ये पराक्रमवसूनि वज्रिणः ॥ ५८ ॥

नेति ॥ त्वमनृतं मिथ्याभियोक्तुमभ्याख्यातुम् । ब्रूञोऽर्थग्रहणाद्द्विकर्मकता । 'मिथ्याभियोगोऽभ्याख्यानम्' इत्यमरः । अस्माभिरिति शेषः । नेष्यसे नेष्टोऽसि । कुतः । तपस्वी मुनिः शोच्यश्च । 'मुनिशोच्यौ तपस्विनौ' इति शाश्वतः । तस्य विशिखेषु क आदरः कास्था । न काचिदित्यर्थः । हि यस्मान्नोऽस्माकं भूभृति शैले परेऽन्येऽपि शराः सन्ति ये शरा वज्रिणः शक्रस्य पराक्रमवसूनि पराक्रमधनानि । शौर्यसर्वस्वभूता इत्यर्थः । वज्रिग्रहणाद्वज्रादप्यतिरिच्यन्त इति सूच्यते । अत्र शरेषु पराक्रमसाधनेषु पराक्रमरूपेण वस्तु व्यज्यते ॥

अथ ते शरापेक्षा चेत्तर्हि तथोच्यतामित्याह—

मार्गणैरथ तव प्रयोजनं नाथसे किमु पतिं न भूभृतः ।
त्वद्विधं सुहृदमेत्य सोऽर्थिनं किं न यच्छति विजित्य मेदिनीम् ५९

मार्गणैरिति ॥ अथोत तव मार्गणैः शरैः प्रयोजनं कृत्यं तर्हि भूभृतो गिरेः पतिं प्रभुं किमु न नाथसे किमिति न याचसे । 'नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु' इति धातोर्लट् । न च याच्ञाभङ्गशङ्का कार्येत्याह—त्वदिति । सोऽस्मत्स्वामी तवेव विधा प्रकारो यस्य तं त्वद्विधं त्वादृशम् । महानुभावमित्यर्थः । तथापि सुहृदं मित्रभूतमर्थिनमेत्य लब्ध्वा मेदिनीं विजित्य न यच्छति किं न ददाति किम् । किंतु दास्यत्येव । किं पुनः शरानिति भावः ॥

यदुक्तम् 'त्वद्विधम्' इत्यादि तत्रोपपत्तिमाह—

तेन सूरिरुपकारिताधनः कर्तुमिच्छति न याचितं वृथा ।
सीदतामनुभवन्निवार्थिनां वेद यत्प्रणयभङ्गवेदनाम् ॥ ६० ॥

तेनेति ॥ तेन कारणेन सूरिर्विद्वानत एवोपकारिताधन उपकारकत्वमात्रधनः स किरातभूपतिर्याचितं याच्ञां वृथा व्यर्थं कर्तुं नेच्छति । कुतः । यद्येन कारणेन सीदतां क्लिश्यतामर्थिनां प्रणयभङ्गवेदनां याच्ञाभङ्गदुःखं स्वयमनुभवन्निव वेद वेत्ति । अतो न वैफल्यशङ्का कार्येत्यर्थः ॥

---

१ 'नानुयोक्तुम्' इति पाठः. २ 'याचसे' इति पाठः.

ननु स्वयंग्राहिणः किं याञ्चादैन्यं तत्राह—

**शक्तिरर्थपतिषु स्वयंग्रहं प्रेम कारयति वा निरत्ययम्।**
**कारणद्वयमिदं निरस्यतः प्रार्थनाधिकबले विपत्फला॥ ६१॥**

शक्तिरिति॥ अर्थपतिषु विषये शक्तिः सामर्थ्यं स्वयंग्रहं स्वाम्यनुज्ञां विना ग्रहणं कारयति। यद्वा निरत्ययमपराधेऽप्यविकारि निर्बाधं प्रेम कर्तृ स्वयंग्रहं कारयति। प्रबलः प्रियो वा परस्य धनं स्वयं गृह्णातीत्यर्थः। अन्यथा दोषमाह—इदं पूर्वोक्तं कारणद्वयं निरस्यतस्त्यजतः। पुंस इति शेषः। अधिकबले प्रबले विषये प्रार्थना तद्धनजिघृक्षा विपत्फलाऽनर्थफलका। अशक्तस्याप्रियस्य सतः प्रबलधनग्रहणाशा फणिशिरोमणिग्रहणसाहसवदनर्थाय कल्पत इत्यर्थः॥

ननु शस्त्रार्थसंपत्त्या शक्तत्वाभिमानः, तत्राह—

**अस्त्रवेदमधिगम्य तत्त्वतः कस्य चेह भुजवीर्यशालिनः।**
**जामदग्न्यमपहाय गीयते तापसेषु चरितार्थमायुधम्॥ ६२॥**

अस्त्रवेदमिति॥ इह जगति तापसेषु तपस्विनां मध्ये। 'यतश्च निर्धारणम्' इति सप्तमी। जमदग्नेरपत्यं पुमाञ्जामदग्न्यः। 'गर्गादिभ्यो यञ्'। तमपहाय। परशुरामं विनेत्यर्थः। अस्त्रवेदं तत्त्वतोऽधिगम्य। भुजवीर्येण शालत इति भुजवीर्यशालिनः। उभयसंपन्नस्येत्यर्थः। शालनक्रियापेक्षया समानकर्तृकत्वात्क्त्वानिर्देशः। कस्य वायुधं चरितः प्राप्तोऽर्थो येन तच्चरितार्थं सार्थकं गीयते। न कस्यापीत्यर्थः। अतस्तवापि तापसत्वादकिंचित्करस्य तेन सह सख्यमेव मुख्यमिति भावः॥

ननु युष्मन्मृगवधशरहरणाभ्यां द्रोहिणो मम तेन कथं सख्यं स्यादित्याशङ्क्य सत्यं तथापि तावन्मृगवधापराधः क्षमिष्यत इत्याह—

**अभ्यघानि मुनिचापलात्त्वया[1] यन्मृगः क्षितिपतेः परिग्रहः।**
**अक्षमिष्ट तदयं प्रमाद्यतां[2] संवृणोति खलु दोषमज्ञता॥ ६३॥**

अभ्यघानीति॥ त्वया मुनिचापलात्। ब्राह्मणचापल्यादित्यर्थः। क्षितिपतेरस्मत्स्वामिनः। परिगृह्यत इति परिग्रहः। तेन स्वीकृत इत्यर्थः। 'परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः' इति विश्वः। यन्मृगोऽभ्यवान्यभिहत इति। हन्तेः कर्मणि लुङ्। तद्धननमयमस्मत्स्वाम्यक्षमिष्ट सोढवानेव। तथा हि। प्रमाद्यताम्। अविमृश्यकारिणामित्यर्थः। दोषमपराधमज्ञताऽज्ञानिता संवृणोत्याच्छादयति। नाज्ञस्यापराधो गण्यत इत्यर्थः॥

अथ सुहृद्भावेन हितमुपदिशति—

**जन्मवेषतपसां विरोधिनीं मा कृथाः पुनरमूमपक्रियाम्।**
**आपदेत्युभयलोकदूषणी वर्तमानमपथे हि दुर्मतिम्॥ ६४॥**

जन्मेति॥ जन्म सत्कुले प्रसूतिः, वेषो जटावल्कलादिः, तपो नियमः, तेषां विरोधिनीं विरुद्धाममूमेवंविधामपक्रियामपकारम्। पुनः। इतःपरमित्यर्थः। मा

---

१ 'मुनिना त्वया बलात्' इति पाठः. २ 'प्रमार्ज्यताम्' इति पाठः.

कृथाः मा कुरु। करोतेः कर्तरि माङि लुङ्। 'वयोबुद्ध्यर्थवाग्वेषश्रुताभिनयकर्मणाम्। आचरेत्सदृशीं वृत्तिमजिह्मामशठां तथा॥' इति स्मरणात्। उक्तवैपरीत्ये दोषमाह—आपदिति। यस्मात्। अपथे वर्तमानं दुर्मतिम्। पुरुषमिति शेषः। उभौ लोकौ दूषयति हन्तीत्युभयलोकदूषणी। 'तद्धितार्थ—' इत्यादिनोत्तरपदसमासः। आपदेति प्राप्नोति। समासविषय उभशब्दस्थाने उभयशब्दप्रयोग एव साधुः। यदाह कैयटः—'उभादुदात्तो नित्यमिति नित्यग्रहणस्येदं प्रयोजनं वृत्तिविषय उभशब्दस्य प्रयोगो मा भूदुभयशब्दस्यैव रूपं यथा स्यादित्युभयत्रेत्यादि भवति' इति॥

यदुक्तम् 'अभ्यघानि' इति तदेव स्फुटयति—

**यष्टुमिच्छसि पितॄन्न सांप्रतं[1] संवृतोऽर्चिचयिषुर्दिवौकसः।**
**दातुमेव पदवीमपि क्षमः किं मृगेऽङ्ग विशिखं न्यवीविशः॥ ६५॥**

यष्टुमिति॥ सांप्रतं संप्रति। 'संप्रतीदानीमधुना सांप्रतं तथा' इत्यमरः। पितॄन्कव्यवाडादीन्यष्टुमर्चयितुं नेच्छसि। यतः संवृत एकान्ते स्थितः। तथा दिवौकसो देवानर्चिचयिषुरप्यर्चयितुमिच्छुरपि नासि। अतो न पित्रर्थेयं हिंसा, नापि देवतार्था। तदाराधने तद्विहितत्वादिति भावः। अथ 'सर्वत आत्मानं गोपायीत' इति श्रुतेरात्मरक्षार्थमिति चेन्नेत्याह—दातुमिति। हे अङ्ग, पदवीं मार्गं दातुमेव। न तु हन्तुम्। मुनित्वादिति भावः। क्षमोऽपि योग्यः सन्नपि। किं किमर्थं मृगे विशिखं न्यवीविशो निवेशितवान्। विशतेर्ण्यन्ताल्लुङ्। अभिधावतो मृगादपसरणेनैवात्मरक्षणे कर्तव्ये यदवधीस्तच्चापलमेव। 'न हिंस्यात्सर्वा भूतानि' इति श्रुतिनिषेधादिति भावः॥

किं बहुना, परमार्थः श्रूयतामित्याह—

**सज्जनोऽसि विजहीहि चापलं सर्वदा क इव वा[3] सहिष्यते।**
**वारिधीनिव युगान्तवायवः क्षोभयन्त्यनिभृता गुरूनपि[4]॥ ६६॥**

सज्जन इति॥ सज्जनोऽसि। अत एव चापलं चपलस्य कर्म विजहीहि त्यज। जहातेर्लोट्। 'आ च हौ' इतीकारः। सर्वदा क इव वा को वा सहिष्यते। इवशब्दो वाक्यालंकारे। वाशब्दोऽवधारणे। असहने कारणमाह—वारिधीनिति। अनिभृताश्चपलाः पुनः पुनरकार्यकारिणो गुरून्धैर्ययुक्तानपि। अन्यत्र विशालानपि। युगान्तवायवः प्रलयपवना वारिधीनिव समुद्रानिव क्षोभयन्ति। उपमानुप्राणितोऽयमर्थान्तरन्यासः॥

नन्वयं किरातः क्षुभितः किं करिष्यति, तत्राह—

**अस्त्रवेदविदयं महीपतिः पर्वतीय इति मावजीगणः।**
**गोपितुं भुवमिमां मरुत्वता शैलवासमनुनीय लम्भितः॥ ६७॥**

अस्त्रेति॥ अयं महीपतिरस्त्रवेदवित्। निग्रहानुग्रहसमर्थ इति भावः। अतः

---

१ 'संप्रति' इति पाठः. २ 'न त्वमर्चि' इति पाठः. ३ 'यः' इति पाठः. ४ 'गुरूनिव' इति पाठः.

पर्वते भवः पर्वतीयः। 'पर्वताच्च' इति छप्रत्ययः। इति हेतोर्मावजीगणः। वनेचरबुद्ध्या मावज्ञासीरित्यर्थः। गणयतेर्माङि लुङ्। 'ई च गणः' इतीकारः। नन्वीदृशश्चेत्किमर्थमिह वने वसति तत्राह—गोपितुमिति। मरुत्वतेन्द्रेणेमां भुवं गोपितुं रक्षितुम्। 'आयादय आर्धधातुके वा' इति विकल्पात् 'गुपूधूप—' इत्यादिनायप्रत्ययः। अनुनीय प्रार्थ्य शैलवासं लम्भितः प्रापितः। 'ण्यन्ते कर्तुश्च कर्मणः' इति वचनादणि कर्तुः कर्मणि क्तः। 'गतिबुद्धि—' इत्यादिनाणि कर्तुः कर्मत्वम्॥

उपसंहरति—

तत्तितिक्षितमिदं मया मुनेरित्यवोचत वचश्चमूपतिः।
बाणमत्रभवते निजं दिशन्नाप्नुहि[1] त्वमपि सर्वसंपदः॥ ६८॥

तदिति॥ तत्तस्मान्मुनिचापलान्मुनेः संबन्धीदं मृगवधरूपमागो मया तितिक्षितं सोढमिति वचश्चमूपतिरवोचत। शरद्रोहस्य प्रत्यर्पणमेव प्रतीकार इत्याह—अत्रभवते पूज्याय स्वामिने। अत्रभवान्व्याख्यातः। निजं बाणं तदीयमेव शरं दिशन्प्रत्यर्पयंस्त्वमपि सर्वसंपद आप्नुहि। सख्येनेति भावः॥

ननु मह्यमेतत्सख्यमेव न रोचते, किं पुनस्तन्मूलाः संपदस्तत्राह—

आत्मनीनमुपतिष्ठते गुणाः संभवन्ति[2] विरमन्ति चापदः।
इत्यनेकफलभाजि मा स्म भूदर्थिता कथमिवार्यसंगमे॥६९॥

आत्मनीनमिति॥ आत्मने हितमात्मनीनम्। 'आत्मन्विश्वजनभोगोत्तरपदात्खः'। उपतिष्ठते संगच्छते। 'उपाद्देवपूजासंगतिकरणमित्रकरणपथिषु' इति वक्तव्यादात्मनेपदम्। गुणा विनयादयः संभवन्त्यापदश्च विरमन्ति। 'व्याङ्परिभ्यो रमः' इति परस्मैपदम्। इत्यनेकफलभाजि नानाफलोत्पादके आर्यसंगमे साधुसंगतावर्थितापेक्षा कथमिव मा स्म भूत्। सर्वदा भवत्येव॥

न चायं दूरे वर्तत इत्याह—

दृश्यतामयमनोकहान्तरे तिग्महेतिपृतनाभिरन्वितः।
साहिवीचिरिव सिन्धुरुद्धतो भूपतिः समयसेतुवारितः॥ ७०॥

दृश्यतामिति॥ तिग्महेतिभिस्तीक्ष्णायुधाभिः। 'हेतिर्ज्वालास्त्रसूर्यांशुषु' इति हेमचन्द्रः। पृतनाभिर्वाहिनीभिः। 'वाहिनी पृतना चमूः' इत्यमरः। अन्वितो भूपतिः। साहयः ससर्पा वीचयो यस्य स सिन्धुः समुद्र इवोद्धतः। किंतु समयो मर्यादा सेतुरिव स समयसेतुस्तेन वारितः सन्। हस्तेन निर्दिशन्नाह—अयमनोकहान्तरे द्रुमान्तर्धाने। वर्तत इति शेषः। दृश्यताम्। 'अनोकहः कुटः शालः पलाशी द्रुद्रुमागमाः' इत्यमरः॥

---

[1] 'प्राप्नुहि' इति पाठः. [2] 'न्त्युपरमन्ति' इति पाठः.

अथास्य विज्ञानमेवाह—

सज्यं धनुर्वहति योऽहिपतिस्थवीयः
स्थेयाञ्जयन्हरितुरंगमकेतुलक्ष्मीम् ।
अस्यानुकूलय मतिं मतिमन्ननेन
सख्या सुखं[1] समभियास्यसि[2] चिन्तितानि ॥ ७१ ॥

इति भारविकृतौ महाकाव्ये किरातार्जुनीये त्रयोदशः सर्गः ।

सज्यमिति ॥ स्थेयान्स्थिरतरः । 'प्रियस्थिर–' इत्यादिना स्थादेशः । यश्चमूपतिर्हरितुरंगमकेतोरिन्द्रध्वजस्य लक्ष्मीं शोभां जयन् । अहिपतिः शेष इव स्थवीयः स्थूलतरम् । 'स्थूलदूर–' इत्यादिना पूर्वगुणयणादिपरलोपौ । सह ज्यया सज्यं धनुर्वहति । हे मतिमन्, अस्य चमूपतेर्मतिमनुकूलयानुकूलां कुरु । सख्यं कुर्वित्यर्थः । मतिमत्तायाः फलमेतदिति भावः । कुतः । सख्यानेन चमूपतिना हेतुना सुखमक्लेशेन चिन्तितानि मनोरथान्समभियास्यसि प्राप्स्यसि । वसन्ततिलकावृत्तम् ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां किरातार्जुनीयकाव्यव्याख्यायां घण्टापथसमाख्यायां त्रयोदशः सर्गः समाप्तः ॥

---

## चतुर्दशः सर्गः ।

ततः किरातस्य वचोभिरुद्धतैः पराहतः शैल इवार्णवाम्बुभिः ।
जहौ न धैर्यं कुपितोऽपि[3] पाण्डवः सुदुर्ग्रहान्तःकरणा हि साधवः[4] ॥ १ ॥

तत इति ॥ ततः किरातवाक्यानन्तरमुद्धतैः प्रगल्भैः किरातस्य वचोभिः । अर्णवाम्बुभिः शैल इव पराहतोऽभिहतोऽत एव कुपितोऽपि पाण्डवो धैर्यं निर्विकारचित्तत्वं न जहौ न तत्याज । उत्पन्नमपि कोपं स्तम्भयामासेत्यर्थः । तथाहि । साधवः सज्जनाः सुदुर्ग्रहं सुष्ठु दुरासदमप्रकम्प्यन्तःकरणं येषां ते सुदुर्ग्रहान्तःकरणा हि । अर्थान्तरन्यासः ॥

सलेशमुल्लिङ्गितशात्रवेङ्गितः[5] कृती गिरां विस्तरतत्त्वसंग्रहे ।
अयं[6] प्रमाणीकृतकालसाधनः प्रशान्तसंरम्भ इवाददे वचः ॥ २ ॥

सलेशमिति ॥ सह लेशैः सलेशं सकलं यथा तथोल्लिङ्गितमुद्भूतलिङ्गं कृतम् । लिङ्गैस्तद्वाक्यभङ्गिभिरेव सम्यगवगतमित्यर्थः । शत्रुरेव शात्रवः । स्वार्थेऽण्प्रत्ययः । तस्येङ्गितमभिप्रायस्तदुल्लिङ्गितं येन सः । गिरां वाचां संबन्धिनि विस्तरे तत्त्वसंग्रहेऽर्थसंक्षेपे । वैभाषिको द्वन्द्वैकवद्भावः । कृती कुशलः प्रमाणीकृतं प्रधानीकृतं काल एव साधनं येन सः । अवसरोचितं विवक्षुरित्यर्थः । अयं पाण्डवः प्रशान्तसंरम्भः संक्षोभरहित इव वच आददे । उवाचेत्यर्थः ॥

---

१ 'समं' इति पाठः. २ 'समुपयास्यसि' इति पाठः. ३ 'रुषितोऽपि' इति पाठः. ४ 'सूरय' इति पाठः. ५ 'अशेष' इति पाठः. ६ 'इदम्' इति पाठः.

सान्त्वपूर्वकमेवाह—

विविक्तवर्णाभरणा सुखश्रुतिः प्रसादयन्ती हृदयान्यपि द्विषाम् ।
प्रवर्तते नाकृतपुण्यकर्मणां प्रसन्नगम्भीरपदा सरस्वती ॥ ३ ॥

विविक्तेति ॥ विविक्ताः संयोगादिनाश्लिष्टाः स्फुटोच्चारिता वर्णा अक्षराण्येवाभरणानि यस्याः सा । अन्यत्र तु विविक्तानि शुद्धानि वर्णो रूपमाभरणानि च यस्याः सा । 'वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु चाक्षरे' इत्युभयत्राप्यमरः । सुखा श्रुतिः श्रवणं यस्याः सा सुखश्रुतिः । श्राव्येत्यर्थः । अन्यत्र श्रूयत इति श्रुतिर्वाक् । सा सुखा यस्याः सा । मञ्जुभाषिणीत्यर्थः । द्विषामपि हृदयानि प्रसादयन्ती । किं पुनः सुहृदामिति भावः । प्रसन्नानि वाचकानि गम्भीराण्यर्थगुरूणि च पदानि सुप्तिङन्तरूपाणि यस्याः सा । अन्यत्र तु प्रसन्ना विमला गम्भीरपदालसचरणा सरस्वती वाक् । स्त्रीरत्नं च । तथा चोक्तम्—'सरस्वती सरिद्भेदे गोवाग्देवतयोरपि । स्त्रीरत्ने च' इति । न कृतं पुण्यकर्म यैस्तेषां न प्रवर्तते न प्रसरति । किं तु सुकृतिनामेवेत्यर्थः । भवद्वाणी चैवंविधेति धन्यो भवानिति भावः । अत्र काचिन्नायिका वाग्देवता च प्रतीयते । तत्रादौ समासोक्तिरलंकारः । विशेषणमात्रसाम्येनाप्रस्तुतप्रतीतेः । अत एव न श्लेषः ॥

भवन्ति ते सभ्यतमा विपश्चितां मनोगतं वाचि निवेशयन्ति ये ।
नयन्ति तेष्वप्युपपन्ननैपुणा गभीरमर्थं कतिचित्प्रकाशताम् ॥ ४ ॥

भवन्तीति ॥ ते पुरुषा विपश्चितां विदुषाम् । 'विद्वान्विपश्चिद्दोषज्ञः' इत्यमरः । मध्ये सभ्यतमाः सभायां साधुतमा निपुणतमाः । 'साधुः समर्थो निपुणश्च' इति काशिकायाम् । भवन्ति । ये मनोगतं मनसा गृहीतमर्थं वाचि निवेशयन्ति । वाचोद्गिरन्तीत्यर्थः । तेषु वक्तृष्वप्युपपन्ननैपुणाः संभावितकौशलाः कतिचिदेव गभीरं निगूढमर्थं प्रकाशतां स्फुटतां नयन्ति । लोके तावज्ज्ञातार एव दुर्लभाः । तत्रापि वक्तारः । तत्रापि निगूढार्थप्रकाशकाः । त्वयि सर्वमस्तीति स्तुतिः । वनेचरवाक्यरहस्यं ज्ञातमिति स्वयमपि तादृश एवेति हृदयम् ॥

स्तुवन्ति गुर्वीमभिधेयसंपदं विशुद्धिमुक्तेरपरे विपश्चितः ।
इति स्थितायां प्रतिपूरुषं रुचौ सुदुर्लभाः सर्वमनोरमा गिरः ॥५॥

स्तुवन्तीति ॥ किं च केचिद्गुर्वीं महतीमभिधेयसंपदमर्थसंपत्तिं स्तुवन्ति । अपरे विपश्चित उक्तेः शब्दस्य विशुद्धिं सामर्थ्यं स्तुवन्ति । इति प्रतिपूरुषं रुचौ प्रीतौ स्थितायां व्यवस्थितायां सर्वमनोरमाः सर्वेषां शब्दार्थरुचीनां पुंसां मनोरमा गिरः सुदुर्लभाः । त्वद्गिरस्तु सर्वमनोरमा उक्तसर्वगुणसंपत्त्येति भावः ॥

समस्य संपादयता गुणैरिमां त्वया समारोपितभार भारतीम् ।
प्रगल्भमात्मा धुरि धुर्य वाग्मिनां वनेचरेणापि सताधिरोपितः ॥६॥

समस्येति ॥ धुरं वहतीति धुर्यस्तत्संबोधने हे धुर्य हे कार्यनिर्वाहक । 'धुरो यड्ढकौ' इति यत्प्रत्ययः । अत एव समारोपितभार हे स्वामिना निहितसंध्यादिका-

र्यभार। तदाह मनुः—'दूते संधिविपर्ययौ' इति। इमां 'शान्तताविनययोगी' त्यादिकां भारतीं वाचं गुणैर्विविक्तवर्णत्वादिभिः समस्य संयोज्य प्रगल्भं निर्भीकं यथा तथा संपादयता रचयता। व्याहरतेत्यर्थः। त्वया वनेचरेणापीत्यर्थः। सतामपि अपिशब्दो विरोधद्योतनार्थम्। आत्मा स्वयं वाग्मिनां वाचोयुक्तिपटूनाम्। 'वाचोयुक्तिपटुर्वाग्मी' इत्यमरः। 'वाचो ग्मिनिः' इति मत्वर्थीयो ग्मिनिप्रत्ययः। धुर्यग्रेऽधिरोपितः। स्थापित इत्यर्थः। 'रुहः पोऽन्यतरस्याम्' इति पकारः। अत्र मनुः—'वपुष्मान्वीतभीर्वाग्मी दूतो राज्ञः प्रशस्यते' इति॥

वाग्मितामेवाह—

**प्रयुज्य सामाचरितं विलोभनं भयं विभेदाय धियः प्रदर्शितम्।**
**तथाभियुक्तं च शिलीमुखार्थिना यथेतरन्न्याय्यमिवावभासते ॥७॥**

प्रयुज्येति॥ 'शान्तताविनययोगी'त्यादिना साम सान्त्वम्। 'सामसान्त्वमुभे समे' इत्यमरः। प्रयुज्य नियुज्य विलोभनं प्रलोभनं 'मित्रमिष्टम्' इत्यादिनाचरितं संपादितम्। तथा धियो बुद्धेर्विभेदाय व्यामोहनार्थम् 'शक्तिरर्थपतिषु' इत्यादिना भयं प्रदर्शितम्। किं च। शिलीमुखार्थिना। न तु न्यायार्थिनेति भावः। त्वयेति शेषः। 'नाभियोक्तुम्' इत्यादिना तथाभियुक्तं कथितं यथेतरन्न्यायादन्यत्। अन्याय्यमित्यर्थः। न्याय्यं न्यायादनपेतमिवावभासत इत्युपमा। अनेन वाग्मिनामग्रेसरोऽसीति भावः॥

ततः किमत आह—

**विरोधि सिद्धेरिति कर्तुमुद्यतः स वारितः किं भवता न भूपतिः।**
**हिते नियोज्यः खलु भूतिमिच्छता सहार्थनाशेन नृपोऽनुजीविना ॥८॥**

विरोधीति॥ किंतु सिद्धेः फलस्य विरोधि विघातकमितीदमस्मदास्कन्दनरूपं कर्म कर्तुमुद्यतः स भूपतिर्महीपतिर्भवता। धुर्येणेति भावः। किं न वारितो न निवर्तितः। निवारणे हेतुमाह—भूतिमिच्छतेहामुत्र च श्रेयोर्थिना सहचरितावर्थनाशौ स्वार्थानर्थौ यस्य तेन सहार्थनाशेन। समानसुखदुःखेनेत्यर्थः। अनुजीविना भृत्येन नृपः स्वामी हिते नियोज्यो नियम्यः खलु। अन्यथा स्वामिद्रोहपातकी श्रेयसो भ्रष्टः स्यादिति भावः॥

तर्हि नो बाणः क्व गतः, किमत्र वा न्याय्यम्, तत्राह—

**ध्रुवं प्रणाशः प्रहितस्य पत्रिणः शिलोच्चये तस्य विमार्गणं नयः।**
**न युक्तमत्रार्यजनातिलङ्घनं दिशत्यपायं हि सतामतिक्रमः ॥९॥**

ध्रुवमिति॥ प्रहितस्य प्रयुक्तस्य पत्रिणः शरस्य प्रणाशोऽदर्शनं ध्रुवं निश्चितम्। प्रहितश्चेदिति भावः। तस्य नष्टस्य पत्रिणः शिलोच्चये शैले। 'अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः' इत्यमरः। विमार्गणमन्वेषणं नयो न्यायः। 'अन्वेषणं विचयनं मार्गणं मृगणा मृगः' इत्यमरः। अत्र विषये आर्यजनातिलङ्घनं सज्जनव्यतिक्रमो न युक्तम्। हि यस्मात्कारणात्सतामतिक्रमोऽपायमनर्थं दिशति ददाति॥

१ 'प्रयुक्तम्' इति पाठः. २ 'विमर्शनम्' इति पाठः.

यदुक्तम् 'हर्तुमर्हसि' इति तत्रोत्तरमाह—

**अतीतसंख्या विहिता ममाग्निना शिलीमुखाः खाण्डवमत्तुमिच्छता ।**
**अनादृतस्यामरसायकेष्वपि स्थिता कथं शैलजनाशुगे धृतिः ॥१०॥**

अतीतेति ॥ खाण्डवमिन्द्रवनमत्तुं भक्षयितुमिच्छताग्निना ममातीतसंख्या असंख्याः शिलीमुखाः शरा विहिता दत्ताः । खाण्डवदाहेऽक्षयतूणीरदानमुक्तं भारते । अतोऽमरसायकेष्वप्यनादृतस्यादररहितस्य । भावे क्तः । ततो नञा बहुव्रीहिः । मम कथं शैलजनाशुगे किरातबाणे धृतिरास्था स्थिता । न कथंचिदित्यर्थः । अतो नापहारशङ्का कार्येत्यर्थः ॥

यदुक्तम् 'स्मर्यते तनुभृताम्' इत्यादिना सदाचारः प्रमाणमिति तत्रोत्तरमाह—

**यदि प्रमाणीकृतमार्यचेष्टितं किमित्यदोषेण तिरस्कृता वयम् ।**
**अयातपूर्वा परिवादगोचरं सतां हि वाणी गुणमेव भाषते ॥११॥**

यदीति ॥ आर्यचेष्टितं सच्चरितं प्रमाणीकृतं यदि । साधुत्वेनाङ्गीकृतं यदीत्यर्थः । तर्ह्यदोषेण दोषाभावेऽपि । 'क्वचित्प्रसज्यप्रतिषेधेऽपि नञ्समासः' इति भाष्यकारः । उपलक्षणे तृतीया । वयं किमिति तिरस्कृताः । न युक्तमित्यर्थः । हि यस्मात्परिवादगोचरं परनिन्दास्पदमयातपूर्वा सतां वाणी गुणमेव भाषते न दोषम् । अतस्ते मृषादोषभाषिणी न सदाचारप्रामाण्यबुद्धिरिति भावः । पूर्वं न यातेत्ययातपूर्वा । सुप्सुपेति समासः । परत्वात्सर्वनाम्नो निष्ठायाः पूर्वनिपातः । 'स्त्रियाः पुंवत्–' इत्यादिना पुंवद्भावः पूर्वलिङ्गता च । अर्थान्तरन्यासः ॥

नन्वप्रत्यक्षा परबुद्धिः कथं दुष्टेति निश्चीयते, तत्राह—

**गुणापवादेन तदन्यरोपणाद्भृशाधिरूढस्य समञ्जसं जनम् ।**
**द्विधेव कृत्वा हृदयं निगूहतः स्फुरन्नसाधोर्विवृणोति वागसिः १२**

गुणेति ॥ गुणापवादेन विद्यमानगुणापह्नवेन तदन्यरोपणात्तस्माद्गुणादन्यस्य दोषस्याविद्यमानस्यैवारोपणाच्च समञ्जसं जनं सुजनं भृशाधिरूढस्यातिमात्रमाक्रम्य स्थितस्य । अभिक्षिप्तस्येत्यर्थः । कर्तरि क्तः । निगूहतो हृदयं संवृण्वतोऽप्यसाधोरनार्यस्य हृदयं कर्म स्फुरन्विलसन्वागेवासिर्द्विधा कृत्वा भित्त्वेव विवृणोति । अतिदुष्टया वाचैवैतत्पूर्विकाया बुद्धेरपि दौष्ट्यमनुमीयत इति भावः । वागसिरित्यत्र रूपकं द्विधाकरणरूपकसाधकम् ॥

यदुक्तम् 'अभ्यघानि' इति, तत्रोत्तरमाह—

**वनाश्रयाः कस्य मृगाः परिग्रहाः शृणाति यस्तान्प्रसभेन तस्य ते ।**
**प्रहीयतामत्र नृपेण मानिता न मानिता चास्ति भवन्ति च श्रियः ॥**

वनेति ॥ वनाश्रया अत एव मृगाः कस्य परिग्रहाः । न कस्यापीत्यर्थः । किंतु यस्तान्मृगान्प्रसभेन बलात्कारेण शृणाति हिनस्ति । 'शॄ हिंसायाम्' इति धातो-

१ 'आयुधे' इति पाठः. २ 'अदोषेऽपि' इति पाठः. ३ 'रोपणः' इति पाठः. ४ 'विरूढस्य' इति पाठः.

लँट् । ते मृगास्तस्य हन्तुः परिग्रहाः परिगृह्याः हन्ता चाहमेवेति भावः । ननु ममायमित्यभिमानान्नृपस्य स्वत्वमित्याशङ्क्याह—अत्रेति । अत्र मृगे नृपेण मानिता ममेत्यभिमानः प्रहीयतां त्यज्यताम् । कुत इत्याशङ्क्याभिमानमात्रेण स्वत्वाभावादित्याह—नेति । मानिता चास्ति । श्रियः स्वानि च भवन्तीति न । किंतु न भवन्त्येव । सत्यामभिमानितायामित्यर्थः । अभिमानमात्रेण स्वत्वेऽत्यासङ्गादिति भावः ॥

'यष्टुमिच्छसि पितॄन्' इत्यादिना यन्निष्कारणमवधीरित्युपालम्भि, तत्रोत्तरमाह—

न वर्त्म कस्मैचिदपि प्रदीयतामिति व्रतं मे विहितं महर्षिणा ।
जिघांसुरस्मान्निहतो मया मृगो व्रताभिरक्षा हि सतामलंक्रिया १४

नेति ॥ कस्मैचिदपि वर्त्म न प्रदीयतामित्येवं व्रतं महर्षिणा व्यासेन मे मह्यं विहितम् । उपदिष्टमित्यर्थः । अस्मात्कारणाज्जिघांसुर्हन्तुमिच्छुरापतन्नभिधावन्नयं मृगो मया निहतः । हि यस्माद्व्रताभिरक्षा सतामलंक्रिया । न तु दोषः । अत आत्मरक्षणार्थमस्य वधो न निष्कारणमित्यर्थः ॥

'दुर्वचं तत्' इत्यादिना यत्संजातं बन्धुत्वमुक्तं तत्राचष्टे—

मृगान्विनिघ्नन्मृगयुः स्वहेतुना कृतोपकारः कथमिच्छतां तपः ।
कृपेति[1] चेदस्तु मृगः क्षतः क्षणादनेन पूर्वं न मयेति[2] का गतिः १५

मृगानिति ॥ स्वमात्मैव हेतुस्तेन स्वहेतुना । स्वार्थमित्यर्थः । 'सर्वनाम्नस्तृतीया च' इति तृतीया । मृगान्विनिघ्नन्प्रहरन् । मृगान्यातीति मृगयुर्व्याधः । 'मृगयुर्व्याधश्च' इत्यौणादिको युप्रत्ययान्तो निपातः । 'व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः' इत्यमरः । तप इच्छतां तपस्विनां कथं कृतोपकारः । न कथंचिदित्यर्थः । अथ कृपेति चेत् । व्याधस्यापीति शेषः । अस्तु । किं शुष्ककलहेनेति भावः । परंतु यदुक्तं 'निघ्नतः परनिबर्हितम्' इत्यादिना तस्य प्रथमप्रहर्तृत्वं तदयुक्तमित्याह—मृगः क्षणात्क्षतः । आवाभ्यां युगपदेव विद्ध इत्यर्थः । एवं सत्यनेन नृपेणैव पूर्वं हतो मया तु नेत्यत्र का गतिः किं प्रमाणम् । पौर्वापर्यस्य दुर्लक्ष्यत्वादिति भावः । तथा च यदुक्तम् 'व्रीडितव्यम्' इत्युपालम्भस्तस्यैव किं न स्यादिति भावः ॥

पूर्वं 'कृपेति चेदस्तु' इत्युक्तम् । संप्रति तदप्यसहमान आह—

अनायुधे सत्त्वजिघांसिते मुनौ कृपेति वृत्तिर्महतामकृत्रिमा ।
शरासनं बिभ्रति सज्यसायकं कृतानुकम्पः स कथं प्रतीयते ॥१६॥

अनायुध इति ॥ अनायुधे निरायुधे सत्त्वेन केनचित्प्राणिना जिघांसिते हन्तुमिष्टे । हन्तेः सन्नन्तात्कर्मणि क्तः । मुनौ विषये कृपेति वृत्तिर्व्यवहारो महतां महात्मनामकृत्रिमाऽकपटा । सह ज्यया सज्यः सायको यस्मिंस्तच्छरासनं धनुर्बिभ्रति दधति मयि स नृपः कथं कृतानुकम्पो मया प्रतीयते ज्ञायते । इणः कर्मणि लट् । अक्षमे कृपा विहिता न तु क्षम इत्यर्थः ॥

---

१ 'अप्ययम्'; 'तपन्' इति पाठौ. २ 'तथेति' इति पाठः.

अथ कृपामभ्युपगम्याह—

**अथो शरस्तेन मदर्थमुज्झितः फलं च तस्य प्रतिकायसाधनम् ।**
**अविक्षते तत्र मयात्मसात्कृते कृतार्थता नन्वधिका चमूपतेः ॥ १७॥**

अथो इति ॥ अथो प्रश्ने । 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः । तेन नृपेण मदर्थं यथा तथा । अर्थेन सह नित्यसमासः । शर उज्झितस्त्यक्तस्तस्योज्झितस्य फलं च प्रतिकायस्य प्रतिपक्षस्य साधनं वधः । 'साधनं निर्वृतौ मेढ्रे सैन्ये सिद्धौ वधे गतौ' इति विश्वः । अविक्षतेऽखण्डिते तत्र तस्मिन्सफले मयात्मसात्कृते स्वाधीनीकृते सति । 'तदधीनवचने' इति सातिप्रत्ययः । चमूपतेरधिका कृतार्थता साफल्यं ननु खलु । स्वायुधस्य परत्राणशत्रुवधपात्रप्रतिपादनायैकहेतुया सिद्धेरित्यर्थः । तथाप्ययं शरलोभ इति कृपालुताया मूलान्यपि निकृन्ततीति भावः ॥

'मार्गणैरथ तव प्रयोजनम्' इत्यादिना यदुक्तं तन्निराचष्टे—

**यदात्थ कामं भवता स याच्यतामिति क्षमं नैतदनल्पचेतसाम् ।**
**कथं प्रसह्याहरणैषिणां प्रियाः परावनत्या मलिनीकृताः श्रियः १८**

यदिति ॥ स नृपः कामं भवता याच्यतामिति यदात्थ । मामिति शेषः । एतदनल्पचेतसां मनस्विनां न क्षमं न युक्तम् । कुतः । प्रसह्य बलादाहरणैषिणामाहर्तुमिच्छूनाम् । 'क्षत्रियस्य विचितम्' इति स्मरणादिति भावः । परावनत्या याच्ञादैन्येन मलिनीकृताः श्रियः कथं प्रियाः । न कथंचिदित्यर्थः ॥

अथ परेङ्गितमुद्घाट्य भयं दर्शयति—

**अभूतमासज्य विरुद्धमीहितं बलादलभ्यं तव लिप्सते नृपः ।**
**विजानतोऽपि ह्यनयस्य रौद्रतां भवत्यपाये परिमोहिनी मतिः १९**

अभूतमिति ॥ तव नृपोऽभूतमनृतमासज्य । मिथ्याभियुज्येत्यर्थः । 'युक्ते क्ष्मादावृते भूतम्' इत्यमरः । अलभ्यं लब्धुमशक्यं विरुद्धं विपरीतफलकमीहितं मनोरथं बलाल्लिप्सते लब्धुमिच्छति । न चैतच्चित्रमित्याह—हि यस्मादनयस्य दुर्नयस्य रौद्रतां भयंकरत्वं विजानतोऽपि पुरुषस्य मतिर्बुद्धिरपाये विनाशकाले परिमोहिनी भवति । परिमुह्यतीति परिमोहिनी । संपृचादिसूत्रेण ताच्छील्ये घिनुण्प्रत्ययः । प्रायेण विनाशकाले विपरीतबुद्धिर्भवतीति भावः ॥

अथ सर्वथा लभ्यते शरस्तर्हि किमनेन, सुष्ठु विश्रब्धं याच्यतां शरोऽन्यद्वेत्याह—

**असिः शरा वर्म धनुश्च नोच्चकैर्विविच्य किं प्रार्थितमीश्वरेण ते ।**
**अथास्ति शक्तिः कृतमेव याच्ञया न दूषितः शक्तिमतां स्वयंग्रहः २०**

असिरिति ॥ असिः खड्गः शरा वर्म कवचमुच्चकैरुत्कृष्टं धनुश्च धनुर्वा ते तवेश्वरेण स्वामिना विविच्यैकैकशो विभज्य किं न प्रार्थितं न याचितम् । येन प्रयोजनं तद्दास्यामीति भावः । नपुंसकैकशेषः । अथास्य वीराभिमानिनो नृपस्य शक्तिरस्ति । चेदिति शेषः । याच्ञया कृतमेवालमेव । साध्याभावाद्याचितव्यमेवे-

१ 'अनन्यचेतसाम्' इति पाठः. २ 'ईदृशम्' इति पाठः. ३ 'विभृत्य' इति पाठः.

त्यर्थः । गम्यमानक्रियापेक्षया करणत्वात्तृतीयेत्युक्तं प्राक् । कृतमिति निषेधार्थमव्ययम् । यतः शक्तिमतां स्वयंग्रहो बलाद्ग्रहणं न दूषितः किंतु भूषणमेव वीराणामिति भावः ॥

'राघवप्लवगराजयोरिव' इत्यादिनोपदिष्टं सख्यं प्रत्याचष्टे—

**सखा स युक्तः कथितः[१] कथं त्वया यदृच्छयासूयति यस्तपस्यते ।**
**गुणार्जनोच्छ्रायविरुद्धबुद्धयः प्रकृत्यमित्रा हि सतामसाधवः ॥२१॥**

सखेति ॥ स नृपः कथं त्वया युक्तो योग्यः सखा कथितः । न कथंचित्कथनीय इत्यर्थः । कुतः । यो नृपस्तपस्यते तपश्चरते । अनपराधिन इत्यर्थः । 'क्रुधद्रुह–' इत्यादिना संप्रदानत्वाच्चतुर्थी । यदृच्छया स्वैरवृत्त्या । 'यदृच्छा स्वैरिता' इत्यमरः । असूयत्यसूयां करोति । 'असूया तु दोषारोपो गुणेष्वपि' इत्यमरः । प्रत्युत शत्रुरेवायमित्याह—हि यस्माद्गुणानामर्जने य उच्छ्राय उत्कर्षस्तस्य विरुद्धा विमुखा बुद्धिर्येषां ते तथाऽसाधवो दुष्टाः सतां सज्जनानां प्रकृत्यमित्राः प्रकृत्या शत्रवः । 'द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः' इत्यमरः ॥

हीनजातिवृत्तित्वात्सख्यानर्हः स इत्याह—

**वयं क्व वर्णाश्रमरक्षणोचिताः[२] क्व जातिहीना मृगजीवितच्छिदः ।**
**सहापकृष्टैर्[३]महतां न संगतं भवन्ति गोमायुसखा न दन्तिनः ॥२२॥**

वयमिति ॥ वर्णाश्रमरक्षणोचिता विशुद्धवृत्तयो वयं राजानः क्व । जातिहीना मृगजीवितच्छिदो हिंसाजीविनो व्याधाः क्व । फलितमाह—अपकृष्टैरुक्तरीत्या जात्या वृत्त्या च निकृष्टैः सह महतां ताभ्यामेवोत्कृष्टानां संगतं सख्यं न । घटत इति शेषः । तथाहि । दन्तिनो गजा गोमायूनां शृगालानां सखायो गोमायुसखा न भवन्ति । 'स्त्रियां शिवा भूरिमायगोमायुमृगधूर्तकाः । शृगालवञ्चकक्रोष्टुफेरुफेरवजम्बुकाः ॥' इत्यमरः । अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥

नीचसख्यं कथमधिक्षिप्यत इति चेत्तत्राह—

**परोऽवजानाति यदज्ञताजडस्तदुन्नतानां न विहन्ति धीरताम्[४] ।**
**समानवीर्यान्वयपौरुषेषु यः करोत्यतिक्रान्तिमसौ तिरस्क्रिया ॥२३**

पर इति ॥ अज्ञताजडो मोहान्धः परोऽवजानाति यत्तदवज्ञानमुन्नतानां महतां धीरतां निर्विकारचित्तत्वं न विहन्ति । न विकारं जनयतीत्यर्थः । क्रोष्ट्रेव सिंहस्येति भावः । किंतु समानानि तुल्यानि वीर्यान्वयपौरुषाणि शक्तिकुलविक्रमा येषां तेषु मध्ये । निर्धारणे सप्तमी । यः कश्चिदित्यर्थः । अतिक्रान्तिमतिक्रमं करोति चेदसौ सदृशजनातिक्रमस्तिरस्क्रिया तिरस्कारः । यथा सिंहे सिंहस्येति भावः ॥

तर्हि नीचे कीदृशी वृत्तिरित्याशङ्क्य सोपपत्तिकमाह—

**यदा विगृह्णाति हतं तदा यशः करोति मैत्रीमथ दूषिता गुणाः ।**
**स्थितिं समीक्ष्योभयथा[५] परीक्षकः करोत्यवज्ञोपहतं पृथग्जनम् ॥२४॥**

---

१ 'सखितः' इति पाठः. २ 'पालनोचिताः' इति पाठः. ३ 'अवकृष्टैः' इति पाठः. ४ 'प्रतीत' इति पाठः. ५ 'इतिं प्रतर्क्योभयथा' इति पाठः.

यदेति ॥ यदा विगृह्णाति विरुणद्धि । पृथग्जनेनेति शेषः । तदा यशो हतं नाशितं भवेत् । अथ मैत्रीं करोति तदा गुणा दूषिताः । भवेयुरिति शेषः । इत्युभयथा स्थितिं समीक्ष्य प्रतर्क्य विमृश्य परीक्षको विवेचकः पृथग्जनं नीचजनमवज्ञयानादरेणोपहतं तिरस्कृतं करोति । उपेक्षत इत्यर्थः ॥

उपसंहरन्नाह—

**मया मृगान्हन्तुरनेन हेतुना विरुद्धमाक्षेपवचस्तितिक्षितम् ।**
**शरार्थमेष्यत्यथ[1] लप्स्यते गतिं शिरोमणिं दृष्टिविषाज्जिघृक्षतः २५**

मयेति ॥ अनेन हेतुना संधिविग्रहानर्हत्वेन कारणेन मया मृगान्हन्तुर्व्याधस्य संबन्धि । हन्तेस्तृन्प्रत्ययः । अत एव 'न लोक–' इत्यादिना षष्ठीप्रतिषेधः । विरुद्धमतिपरुषमाक्षेपवचस्तिरस्कारवचनं तितिक्षितं सोढम् । ननु सख्यानङ्गीकारे बलाच्छरं ग्रहीष्यतीत्याशङ्क्याह—शरेति । अथ शरार्थमेष्यति दृष्टौ विषं यस्य तस्माद्दृष्टिविषात्सर्पविशेषाच्छिरोमणिं जिघृक्षतो ग्रहीतुमिच्छतो गतिं दशां लप्स्यते प्राप्स्यति ॥

**इतीरिताकूतमनीलवाजिनं जयाय दूतः प्रतितर्ज्य[2] तेजसा ।**
**ययौ समीपं ध्वजिनीमुपेयुषः प्रसन्नरूपस्य विरूपचक्षुषः ॥ २६ ॥**

इतीति ॥ इतीत्थमीरिताकूतमुक्ताभिप्रायमनीलवाजिनं श्वेताश्वमर्जुनं दूतो जयाय तेजसा प्रतापेन प्रतितर्ज्य । अस्मानजित्वा क्व गमिष्यसीति भीषयित्वेत्यर्थः । ध्वजिनीमुपेयुषः सेनासंगतस्य प्रसन्नरूपस्य । अर्जुनं प्रतीति शेषः । विरूपचक्षुषस्त्र्यम्बकस्य समीपं ययौ ॥

**ततोऽपवादेन पताकिनीपतेश्चचाल निर्ह्रादवती महाचमूः ।**
**युगान्तवाताभिहतेव कुर्वती निनादमम्भोनिधिवीचिसंहतिः ॥२७॥**

तत इति ॥ ततः पताकिनीपतेः सेनापतेरपवादेनादेशेन । 'अपवादोऽप्यथादेशः' इति सज्जनः । निर्ह्रादवती शब्दवती महाचमूः सेना युगान्तवातैरभिहता आन्दोलिता अत एव निनादं कुर्वत्यम्भोनिधिवीचिसंहतिरर्णवोर्मिसमूह इव चचाल ॥

**रणाय जैत्रः[3] प्रदिशन्निव त्वरां तरङ्गितालम्बितकेतुसंततिः[4] ।**
**पुरो बलानां सघनाम्बुशीकरः शनैः प्रतस्थे सुरभिः समीरणः २८**

रणायेति ॥ जेतैव जैत्रो जयनशीलः । अनुकूल इत्यर्थः । जयतेस्तृन्नन्तात्प्रज्ञादित्वात्स्वार्थेऽण्प्रत्ययः । तरङ्गितं संजाततरङ्गं यथा तथालम्बिता अवस्थिताः केतुसंततयो येन सः सह घनैः सान्द्रैरम्बुशीकरैः सघनाम्बुशीकरः सुरभिः सुगन्धः समीरणो वायू रणाय त्वरां प्रदिशन्निव त्वरयन्निव बलानां सैन्यानां पुरोऽग्रे शनैः प्रतस्थे प्रस्थितः । ववावित्यर्थः ॥

---

१ 'एष्यन्नथ' इति पाठः. २ 'प्रतिभर्त्स्य' इति पाठः. ३ 'जेतुः' इति पाठः. ४ 'चिह्नसंहतिः' इति पाठः.

**जयारवक्ष्वेडितनादमूर्च्छितः शरासनज्यातलवारणध्वनिः ।**
**असंभवन्भूधरराजकुक्षिषु प्रकम्पयन्गामवतस्तरे दिशः ॥ २९ ॥**

जयेति ॥ जयारवैर्बन्दिनां जयजयेतिशब्दैः क्ष्वेडितनादैः सिंहनादैश्च मूर्च्छितो वर्धितः शरासनज्यानां धनुर्गुणानां तलवारणानां ज्याघातवारणानां च ध्वनिर्भूधरराजकुक्षिषु गिरिगुहास्वसंभवन्नमान् । अवकाशमलभमान इत्यर्थः । अत एव गां भुवं प्रकम्पयन् । एतेन बलानां बाहुल्यमुक्तम् । दिशोऽवतस्तरे व्यानशे । 'ऋतश्च संयोगादेर्गुणः' । अत्र मूर्च्छापदार्थस्य विशेषणगत्यासंभवनहेतुत्वात्काव्यलिङ्गरूपम्, गिरिकुक्षिरूपापेक्षया ध्वनेराधेयस्याधिक्योक्तेरधिकालंकारश्च । तेभ्यश्चेयमसंभवन्निति व्यञ्जकं विनोत्थाप्यमानोपात्तमूर्च्छागुणनिमित्ता प्रतीयमाना क्रियोत्प्रेक्षा । तैरङ्गाङ्गिभावेन संकीर्यत इति संकरः ॥

**निशातरौद्रेषु विकासतां[1] गतैः प्रदीपयद्भिः ककुभामिवान्तरम् ।**
**वनेसदां हेतिषु भिन्नविग्रहैर्[2]विपुस्फुरे रश्मिमतो[3] मरीचिभिः ॥३०॥**

निशातेति ॥ निशातास्तीक्ष्णा अत एव रौद्रा भीषणाश्च ये तेषु निशातरौद्रेषु । विशेष्यविशेषणयोरन्यतरविशेष्यत्वविवक्षायामिष्टत्वाद्विशेषणसमासः । वने सीदन्तीति वनेसदां वनेचराणाम् । 'सत्सूद्विष–' इत्यादिना क्विप् । 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । हेतिष्वायुधेषु । 'हेतिः शस्त्रेऽपि पुंस्त्रियोः' इति केशवः । भिन्नविग्रहैः संक्रान्तमूर्तिभिरत एव विकासतां विसृत्वरतां गतैरत एव ककुभां दिशामन्तरमवकाशं प्रदीपयद्भिः प्रज्वालयद्भिरिव स्थितैरित्युत्प्रेक्षा । रश्मिमतः सूर्यस्य । 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः' इति मतुपो मकारस्य न वकारः । मरीचिभिः करैः । 'भानुः करो मरीचिः स्त्रीपुंसयोः' इत्यमरः । विपुस्फुरे बभासे । स्फुरतेर्भावे लिट् ॥

**उदूढवक्षःस्थगितैकदिङ्मुखो विकृष्टविस्फारितचापमण्डलः ।**
**वितत्य पक्षद्वयमायतं बभौ विभुर्गुणानामुपरीव मध्यगः ॥ ३१ ॥**

उदूढेति ॥ उदूढेनोन्नतेन वक्षसा स्थगितमाच्छादितमेकमेकतरं दिङ्मुखं येन सः । विकृष्टमाकृष्टमत एव विस्फारितं निर्घोषितं चापमण्डलं येन स विभुः शिवः । आयतं विस्तृतं पक्षद्वयं पार्श्वद्वयं वितत्य स्वमहिम्ना व्याप्य । 'पक्षः साध्यगरुत्पार्श्वसहायबलभित्तिषु' इति वैजयन्ती । गुणानां मध्यगो मध्यस्थोऽप्युपरि स्थित इव बभौ । सर्वोन्नतत्वात्तथा लक्षित इत्यर्थः ॥

**सुगेषु[4] दुर्गेषु च तुल्यविक्रमैर्जवादहंपूर्विकया यियासुभिः ।**
**गणैरविच्छेदनिरुद्धमाबभौ वनं निरुच्छ्वासमिवाकुलाकुलम् ॥३२॥**

सुगेष्विति ॥ सुखेन दुःखेन च गच्छन्त्येष्विति सुगेषु सुगमेषु दुर्गेषु दुर्गमेषु च । समविषमदेशेष्वित्यर्थः । सुदुरोरधिकरणार्थे डो वक्तव्यः । अत एव टिलोपः । तुल्यविक्रमैर्लाघवात्समसंचारैर्जवाद्वेगादहंपूर्विकयाहमहमिकया । 'अहंपूर्वमहंपूर्व-

१ 'विकासिताम्' इति पाठः. २ 'संग्रहैः' इति पाठः. ३ 'रश्मिवतः' इति पाठः. ४ 'समेषु' इति पाठः.

